**तस्य** इन्द्रेणावगतस्य ब्रह्मण **एष** वक्ष्यमाण **आदेश** उपदेशः। **यत्** प्रसिद्धं ब्रह्मरूपं शास्त्रेषु स्वयंप्रकाशम् **एतद्** बुद्धेर्द्रष्टृ वक्ष्यमाणस्वरूपम् **विद्युतः** प्रसिद्धायास्तडितः **व्यद्युतद्** विशेषेण द्योतनमकरोत्। **आ ३** आकारप्लुतिराश्चर्यार्था। आश्चर्यं तेजोधातुविलक्षणमपि ब्रह्म विद्युतः सकाशाद् विस्पष्टं प्रकाशं कृतवदिव, स्वयंप्रकाशमित्यर्थः। **इति** अनेन प्रकारेण आदेश इत्यन्वयः। यथा स्वयं विद्युतोऽपि विशेषप्रकाशवदिव **इद्** इत्थं चक्षुरादीनि सान्तःकरणानि **न्यमीमिषद्** निमेषोपलक्षितं स्वस्वव्यापारं कारितवत्। **आ ३** आकारप्लुतिः पूर्ववदाश्चर्यं–सर्वक्रियाहीनोऽपि सर्वदेवनिष्पाद्यां क्रियां कारितवान् इव **इति** अनेन प्रकारेण आदेश इत्यन्वयः। **अधिदैवतं** हिरण्यगर्भमधिकृत्य इति। द्वाभ्यां वाक्याभ्यामुपदिष्ट आदेशः अधिदैवतम्।।४।।

**अथ** अधिदैवतादेशकथनानन्तरम् **अध्यात्मम्** आत्मानम् अधिकारिशरीरमुररीकृत्य उच्यमान उपदेशोऽध्यात्मम्। **यत्** प्रसिद्धम् अधिदैवं विद्युतोऽपि विशेषप्रकाशवदिव **एतद्** बुद्धेर्द्रष्टृ सर्वगतं प्रति **गच्छतीव च** यातीव, चकारात् स्पृशतीव च **मनः** अन्तःकरणम्; **अनेन चान्तः** करणेनैव **एतद्** विद्युतोऽपि विशेषप्रकाशवदिव ब्रह्म **उपस्मरति** 'अहं ब्रह्मास्मि' इति सामीप्येन शास्त्रोक्तं स्मरति; **अभीक्ष्णं** निरन्तरं **सङ्कल्प** इदं ब्रह्माहं साक्षात्करोमि–इत्येवंरूपोऽभिलाषः, सोऽप्यनेनेत्यभिप्रायः।।५।।

**तद्** उक्तं **ह** किल **तद्वनं नाम** तस्य तस्य प्राणिजातस्य वननीयं सम्भजनीयम्, एतदेव नामधेयम्। तस्येदानीं नामानुगुणोपासनमाह– **तद्वनं** नामधेयम् **इति** अनेन प्रकारेण तद् **उपासितव्यं** विजातीयप्रत्ययशून्येन सजातीयप्रत्ययप्रवाहेण साक्षात्कर्तव्यम्। इदानीं गुणोपासनस्य फलमाह–**स** उपासकलक्षणसम्पन्नो **यः** कश्चन **एतत्** स्वयंप्रकाशं सर्वव्यापारनिमित्तं मनःसङ्कल्पस्मरणगमनेषु कारणं ब्रह्म **एवम्** उक्तेन प्रकारेण तद्वनंनामधेयमिति **वेद** जानाति–उपास्त इत्यर्थः; **अभि हैनं सर्वाणि भूतानि** गच्छन्ति। **ह** किल **एनं** तद्वननामोपासकं निखिलानि स्थावरजङ्गमानि भूतानि दर्शनस्पर्शनादिना अभिगच्छन्ति सङ्गच्छन्ति **संवाञ्छन्ति** सर्वत इच्छां कुर्वन्ति।।६।।

इदानीमाख्यायिकां परित्यज्य पुनः शिष्यप्रश्नमवतारयति–**उपनिषदं** ब्रह्मविद्यां 'विद्यया विन्दतेऽमृतम्' इति भवतैवोक्तं **भो** हे गुरो! **ब्रूहि** कथय किमु ब्रह्मविद्या, आहोस्विद् अन्याऽपि? इति प्रश्नार्थः। **इति** अनेन प्रकारेण।

ब्रह्मविद्या चेद्, उक्तैव। तस्याः साधनानि चेत्, तपआदीनि वक्ष्यामीत्यनेनाभिप्रायेण गुरुराह–**उक्ता** 'श्रोत्रस्य श्रोत्रम्' इत्यारभ्य 'अभीक्ष्णं सङ्कल्प' इत्यन्तेन गुणोपासनासहितेन वाक्यसन्दर्भेण कथिता **ते** तुभ्यम् **उपनिषत्**–तादात्म्यलक्षणेन सामीप्येन नितरां ब्रह्म गमयित्वा, अहं-ममादीन् ग्रन्थीन् शिथिलीकृत्य, अविद्यां ससंस्कारां सादयति विनाशयतीति उपनिषद् ब्रह्मविद्या। **ब्राह्मीं वाव** ब्रह्मणा सत्यज्ञानलक्षणेन सम्बद्धा ब्राह्मी, तामेव, न तु तत्सम्बद्धां तपआदिकाम्। **त उपनिषदं** व्याख्यातम्। **अब्रूम** उक्तवन्तः। अतोऽन्यां कथयिष्यामीत्यभिप्रायः।।७।।

**तस्यै**–उक्ताया ब्राह्म्या उपनिषद उत्पत्त्यर्थं **तपः** तपःशब्दाभिधेयं स्वधर्मानुगुणशरीरसन्तापकरं मनइन्द्रियैकाग्र्यादिषु, **दम** इन्द्रियनिग्रहः, **कर्म** स्ववर्णाश्रमोचितं श्रौतं स्मार्तं च **इति** आदिकमन्यदपि शमब्रह्मचर्यादि। इदानीमस्या उपनिषदः–सब्राह्म्युपनिषदः–उपासनमाह–**प्रतिष्ठाः** प्रतितिष्ठन्ति एतैः इति प्रतिष्ठा इयं तपआद्युपनिषत्कामधेनुः, ब्रह्मविद्योपनिषद्वत्सा, चतुष्पादित्यर्थः। ततः **प्रतिष्ठाः** पादाः। इदानीं तान् विशेषत आह–**वेदा** ऋगाद्याश्चत्वारः। वेदानां षडङ्गानि विद्याकामधेनोः परिशिष्टानि निखिलाङ्गानि। **सत्यं** कालत्रयेऽपि बाधशून्यं ब्रह्म भूरिव इतरस्या गोः **आयतनं** प्रचारोपवेशनादिस्थलम्।।८।।

**यो** मुमुक्षुर्ब्रह्मविद्यार्थी तपआदिसम्पादनोद्यतो **वै** प्रसिद्धोऽनुत्पन्नब्रह्मसाक्षात्कारः श्रद्धालुः **एतां** तपआदिकामधेनुं ब्रह्मविद्यावत्साम् **एवं** वेदपादादिरूपेण **वेद** जानाति, उपास्त इत्यर्थः; सः **अपहत्य** स्वस्मादपच्छेदपुरःसरं विनाश्य **पाप्मानं** ब्रह्मविद्योत्पत्तिप्रतिबन्धहेतुम् **अनन्ते** विनाशरहिते **स्वर्गे** स्वर्गवासिभिर्गेय आनन्दात्मनि **लोके** स्वयम्प्रकाशे **ज्येये** ज्यायसि सर्वस्माद् अभ्यधिके ब्रह्मणीत्यर्थः **प्रतितिष्ठति** संजातचरमसाक्षात्कारः प्रकर्षेण पुनरुत्थानशून्यत्वेन अवस्थानं करोति। **प्रतितिष्ठति** व्याख्यातम्। पदाभ्यास उपनिषत्समाप्त्यर्थः।।९।।

**।। इति श्रीशङ्करानन्दभगवतः कृतौ केनोपनिषद्दीपिकायां चतुर्थः खण्डः ।।४।।**

**।। समाप्तेयं शङ्करानन्दकृता तलवकारोपनिषदपरपर्यायकेनोपनिषद्दीपिका ।।**